न दास्यामि । त्वामेव पुनः विनाशं प्रापयिष्यामि । त्वं हि बालतया मम वञ्चितभावं न जानासि, म्रियमाणौ उभौ अपि मरिष्यावः । एष ते शीर्षं छित्त्वा भूम्यां क्षेप्स्यामि' इत्युक्त्वा संदंशेन अळैः तस्य ग्रीवां न्यपिपीडत् । स वृत्तकृतेन मुखेन अक्षिभ्यां अश्रुणा प्रक्षरता मरणभयतर्जितः 'स्वामिन् अहं त्वां न खादिष्यामि, जीवितं मे देहि' इत्याह । 'यद्येवं अवतार्य सरसि मां विसृज' इति । स निवृत्य सर एव अवतीर्य कर्कटकं सरःपर्यन्ते पङ्कपृष्ठे अतिष्ठिपत् । कर्कटकः कर्तरिकया कुमुदनलं कल्पयन्निव तस्य ग्रीवां कल्पयित्वा उदकं प्राविक्षत् । तदाश्चर्यं दृष्ट्वा वरणवृक्षे अध्यवस्था देवता साधुकारं ददाना वनं उन्नादयमाना मधुरस्वरेण इमां गाथामाह—

नात्यन्तनिकृतिप्रज्ञो निकृत्या सुखमेधते ।
आराध्नोति निकृतिप्रज्ञो बको कर्कटकादिव ॥ इति ।

[ शास्ता 'न भिक्षवः ! इदानीमेव ग्रामवासिचीवरवद्धकेन एष वञ्चितः । अतीतेऽपि वञ्चित एव' इतीमं धर्मादेशनमाहृत्य, अनुसन्धिं घटयित्वा जातकं समवादीधपत्—तदा स जैत्रवनवासिचीवरवद्धकोऽभूत् , कर्कटको ग्रामवासिचीवरवद्धकः, वृक्षदेवता पुनरहमेव' इति । ]

इति बकजातकम् ।

## ( ४ ) सिंहचर्मजातकम् ।

[ इदं शास्ता जैत्रवने विहरन् कोकालिकमारभ्याऽचकथत् । सोऽस्मिन् काले स्वरभङ्गं भणितुकामोऽभूत् । शास्ता तां प्रवृत्तिं श्रुत्वाऽतीतमाहार्षीत् । ]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्त्वः कर्षककुले निर्वृत्य वयःप्राप्तः कृषिकर्मणा जीवितमचिक्लिपत् । तस्मिन् काले एको वणिग् गर्दभभारकेन व्यवहारं कुर्वन् विचरति । स

न दस्सामि, तञ्ञेव पन विनासं पापेस्सामि, त्वं हि वालताय मया वञ्चितभावं न जानासि, मरन्ता उभोपि मरिस्साम। एस ते सीसं छिन्दित्वा भूमियं खिपिस्सामी'ति वत्वा सण्डासेन विय अळेहि तस्स गीवं निप्पीळेसि। सो वत्तकतेन मुखेन अक्खीहि अस्सुना पग्घरन्तेन मरणभयतज्जितो 'सामि, अहं तं न खादिस्सामि, जीवितं मे देही'ति आह। 'यदि एवं ओतरित्वा सरस्मिं मं विस्सज्जेही'ति। सो निवत्तित्वा सरमेव ओतरित्वा कक्कटकं सरपरियन्ते पङ्कपिट्ठे ठपेसि। कक्कटको कत्तरिकाय कुमुदनाळं कप्पेन्तो विय तस्स गीवं कप्पेत्वा उदकं पाविसि। त अच्छरियं दिस्वा वरणरुक्खे अधिवत्था देवता साधुकारं ददमाना वनं उन्नादयमाना मधुरस्सरेन इमं गाथमाह—

नाच्चन्तनिकतिप्पञ्ञो निकत्या सुखमेधति।४
आराधे निकतिप्पञ्ञो बको कक्कटकामिवाति॥

[ सत्था 'न भिक्खवे ! इदानेव गामवासी चीवरवड्ढकेनेस वञ्चितो, अतीतेपि वञ्चितो येवा'ति इमं धम्मदेसनं आहरित्वा अनुसन्धिं घटेत्वा जातकं समोधानेसि 'तदा सो बको जेतवनवासी चीवरवड्ढको अहोसि, कक्कटको गामवासिचीवरवड्ढको, रुक्खदेवता पन अहमेवा'ति। ]

बकजातकं।

---

## (४) सीहचम्म-जातकं।

[ इदम्पि सत्था जेतवने विहरन्तो कोकालिकं आरब्भ कथेसि। सो इमस्मिं काले सरभञ्ञं भणितुकामो अहोसि। सत्था तं पवत्तिं सुत्वा अतीतं आहरि। ]

अतीते बाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते बोधिसत्तो कस्सककुले निब्बत्तित्वा वयप्पत्तो कसिकम्मेन जीविकं कप्पेसि। तस्मिं काले एको वाणिजो गद्रभभारकेन वोहारं करोन्तो विचरति। सो

गतागतस्थाने गर्दभस्य पृष्ठतः भाण्डकं अवतार्य गर्दभं सिंहचर्मणा प्रावृत्य शालियवक्षेत्रेषु विसृजति। क्षेत्ररक्षकाः तं दृष्ट्वा सिंह इति संज्ञाय उपसंक्रमितुं न शक्नुवन्ति। अथैकदिवसे स वणिक् एकस्मिन् ग्रामद्वारे निवासं गृहीत्वा प्रातराशं पाचयन् ततो गर्दभं सिंहचर्म प्रावृत्य यवक्षेत्रे व्यस्राक्षीत्। क्षेत्ररक्षकाः सिंह इति संज्ञाय तमुपगन्तुमशक्नुवन्तो गेहं गत्वा अरूरुचन्त। सकल-ग्रामवासिनः आयुधानि गृहीत्वा शङ्खान् धमन्तो भेरीर्वादयन्तः क्षेत्रसमीपं गत्वोदनादिषुः। गर्दभो मरणभयभीतो गर्दभरवमरावीत्। अथास्य गर्दभभावं ज्ञात्वा बोधिसत्त्वः प्रथमां गाथामाह—

नैतत् सिंहस्य नदितं न व्याघ्रस्य न द्वीपिनः।
प्रावृतः सिंहचर्मणा जाल्मो नदति गर्दभः॥

ग्रामवासिनोऽपि तस्य गर्दभभावं ज्ञात्वा अस्थीनि भञ्जन्तः पोथयित्वा सिंहचर्मादाय अगमन्। अथ स वणिक् आगत्य तं व्यसनप्राप्तं गर्दभं दृष्ट्वा द्वितीयां गाथामाह—

चिरमपि खलु तं खादेत् गर्दभो हरितं यवम्।
प्रावृतः सिंहचर्मणा रुवन् च अदूदुषत्॥

तस्मिन्नेवं वदत्येव गर्दभः तत्रैव अमृत। वणिगपि तं प्रहाय प्राक्रामीत्।

[ शास्तेदं देशनमाहृत्य जातकं समवादीधपत्। 'तदा गर्दभः कोकालिकोऽभूत्। पण्डितकर्षकः पुनरहमेव' इति। ]

इति सिंहचर्मजातकम्।

---

गतगतट्ठाने गद्रभस्स पिट्ठितो भण्डिकं ओतारेत्वा गद्रभं सीहचम्मेन पारुपित्वा सालियवखेत्तेसु विस्सज्जेति। खेत्तरक्खका तं दिस्वा सीहोति सञ्ञाय उपसंकमितुं न सक्कोन्ति। अथेकदिवसं सो वाणिजो एकस्मिं गामद्वारे निवासं गहेत्वा पातरासं पचापेन्तो ततो गद्रभं सीहचम्मं पारुपित्वा यवखेत्तं विस्सज्जेसि। खेत्तरक्खका 'सीहो'ति सञ्ञाय तं उपगन्तुं असक्कोन्ता गेहं गन्त्वा आरोचेसुं। सकलगामवासिनो आवुधानि गहेत्वा संखे धमेन्ता भेरियो वादेन्ता खेत्तसमीपं गन्त्वा उन्नादसु। गद्रभो मरणभयभीतो गद्रभरवं रवि। अथस्स गद्रभभावं ञत्वा बोधिसत्तो पठमं गाथमाह—

नेतं सीहस्स नदितं न व्यग्घस्स न दीपिनो।
पारुतो सीहचम्मेन जम्मो नदति गद्रभो'ति ॥

गामवासिनोपि तस्य गद्रभभावं ञत्वा अट्ठीनि भञ्जन्ता पोथेत्वा सीहचम्मं आदाय अगमंसु। अथ सो वाणिजो आगन्त्वा तं व्यसनप्पत्तं गद्रभं दिस्वा दुतियं गाथमाह—

चिरम्पि खो तं खादेय्य गद्रभो हरितं यवं।
पारुतो सीहचम्मेन रवमानो च दूसयी'ति ॥

तस्मिं एवं वदन्ते येव गद्रभो तत्थेव मरि। वाणिजोपि तं पहाय पक्कामि।

[ सत्था इमं देसनं आहरित्वा जातकं समोधानेसि। 'तदा गद्रभो कोकालिको अहोसि। पण्डितवाणिजो पन अहमेवा'ति। ]

सीहचम्मजातकं।

## ( ५ ) राध-जातकम् ।

[ इदं शास्ता जैत्रवने विहरन् एकमुत्कण्ठितभिक्षुमारभ्याऽचकथत् । स किल शास्त्रा 'सत्यं किल त्वं भिक्षो ! उत्कण्ठितः' इति पृष्टः 'सत्यं भदन्त !' इत्युक्त्वा 'किं कारणात्' इत्युक्ते एकामलङ्कृतां स्त्रियं दृष्ट्वा किलैषा वासना' इत्याह । अथैनं शास्ता 'मातृग्रामो नाम भिक्षो ! न शक्यो रक्षितुम् । पूर्वं दौवारिकान् स्थापयित्वा रक्षन्तोऽपि रक्षितुं नाशकन् । किं ते स्त्रिया ? लब्ध्वाऽपि रक्षितुं न शक्या' इत्युक्त्वा अतीतमाहार्षीत् । ]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्त्वः शुकयोन्यां न्यवृतत् । राध इति तस्य नाम । कनिष्ठभ्राता पुनरस्य प्रोष्ठपादो नाम । तावुभावपि तरुणकाले एव एको लुब्धको गृहीत्वा वाराणस्यां अन्यतरस्मै ब्राह्मणाय अदात् । ब्राह्मणस्तौ पुत्रस्थाने स्थापयित्वा प्रत्यग्रहीत् । ब्राह्मणस्य पुनः ब्राह्मणी अरक्षिता दुःशीला । स व्यवहारकरणार्थाय गच्छन् तौ शुकपोतकौ आमन्त्र्य 'तात ! अहं व्यवहारार्थाय गच्छामि । काले विकाले वा युवयोः मातुः करणकर्म अवलोकयेथाम्' इति । 'अन्यस्य पुरुषस्य गमनभावं वा आगमनभावं वा जानीयाथाम्' इति । ब्राह्मणीं शुकपोतकौ प्रत्येष्य अगमत् । सा तस्य निष्क्रान्तकालतः प्रस्थाय अनाचारं अचारीत् । रात्रिमपि दिवाऽपि आगच्छतां च गच्छतां च प्रमाणं नास्ति । तत् दृष्ट्वा प्रोष्ठपादो राधमप्राक्षीत् 'ब्राह्मणः इमां ब्राह्मणीं आवाभ्यां निर्याप्य गतः । इयं च पापकर्म करोति, वदाम्येनाम्' इति । राधो 'मां वादीः' इत्याह । स तस्य वचनं अगृहीत्वा 'अम्ब ! किं कारणात् पापकर्म करोषि' इत्याह । सा तं मारयितुकामा भूत्वा 'तात ! त्वं नाम मम पुत्रः । इतः प्रस्थाय न करिष्यामि' इति । 'एहि तात ! तावत्' इति प्रीयमाणेव एनं प्रकोष्य आगतं गृहीत्वा 'त्वं मां अपवदसि । आत्मनः प्रमाणं न जानासि' इति ग्रीवां गृहीत्वा मारयित्वा उद्धनान्तरेषु

# ५–राध–जातकं ।

[ इदं सत्था जेतवने विहरन्तो एकं उक्कण्ठितभिक्खुं आरब्भ कथेसि । सो किर सत्थारा 'सच्चं किर त्वं भिक्खु ! उक्कण्ठितो'ति पुट्ठो 'सच्चं भन्ते'ति वत्वा 'किं कारणा'ति वुत्ते 'एकं अलंकतइत्थिं दिस्वा किलेसवसेना'ति आह । अथ नं सत्था 'मातुगामो नाम भिक्खु ! न सक्का रक्खितु । पुब्बे दोवारिके ठपेत्वा रक्खन्तापि रक्खितुं न सक्खिसु । किं ते इत्थिया ? लद्धापि रक्खितुं न सक्का'ति वत्वा अतीतं आहरि । ]

अतीते वाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते बोधिसत्तो सुक-योनियं निब्बत्ति । 'राधो'तिस्स नामं । कनिट्ठभाता पनस्स पोट्ठपादो नाम । ते उभोपि तरुणकाले येव एको लुद्दको गाहेत्वा वाराणसियं अञ्ञतरस्स ब्राह्मणस्स अदासि । ब्राह्मणो ते पुत्तट्ठाने ठपेत्वा पटिजग्गि । ब्राह्मणस्स पन ब्राह्मणी अरक्खिता दुस्सीला । सो वोहारकरणत्थाय गच्छन्तो ते सुकपोतके आमन्तेत्वा 'तात, अहं वोहारत्थाय गच्छामि, काले विकाले वा तुम्हाकं मातु करणकम्मं ओलोकेय्याथा'ति । 'अञ्ञस्स पुरिसस्स गमनभावं वा आगमन-भावं वा जानेय्याथा'ति । ब्राह्मणिं सुकपोतके पटिच्छापेत्वा अगमासि । सा तस्स निक्खन्तकालतो पट्ठाय अनाचारं चरि । रत्तिम्पि दिवापि आगच्छन्तानं च गच्छन्तानं च पमाणं नत्थि । तं दिस्वा पोट्ठपादो राधं पुच्छि–'ब्राह्मणो इमं ब्राह्मणिं अम्हाकं निय्यादेत्वा गतो, अयं च पापकम्मं करोति, वदामि नन्ति । राधो 'मा वदो'ति आह । सो तस्स वचनं अगहेत्वा 'अम्म, किं कारणा पापकम्मं करोसी'ति आह । सा तं मारेतुकामा हुत्वा 'तात, त्वं नाम मय्हं पुत्तो, इतो पट्ठाय न करिस्सामी'ति, 'एहि तात तावा'ति पियायमाना विय नं पक्कोसित्वा आगतं गहेत्वा 'त्वं मं ओवदसि अत्तनो पमाणं न जानासी'ति गीवं गहेत्वा मारेत्वा उद्धनन्तरेसु

प्राक्षैप्सीत्। ब्राह्मणः आगत्य विश्रम्य बोधिसत्त्वं 'किं तात राध! माता वां अनाचारं करोति न करोति' इति पृच्छन् प्रथमां गाथामाह—

प्रवासादागतस्तात! इदानीं न चिरागतः।
कच्चिन्नु तात! ते माता नान्यमुपसेवते इति॥

राधः 'तात! पण्डितानां भूतमभूतं वा अनिर्यानिकं नाम न कथयन्ति' इति ज्ञापयन् द्वितीयां गाथामाह—

न खलु पुनरेतां शोभनां गिरं सत्योपसंहिताम्।
शयेत् प्रोष्ठपाद इव मुर्मुर उपकूलितः॥

एवं बोधिसत्त्वो ब्राह्मणाय धर्मं दिष्ट्वा 'मयापि अस्मिन् स्थाने वसितुं न शक्यम्' इति ब्राह्मणं आपृच्छ्य अरण्यमेव प्राव्राक्षत्।

[ शास्तेदं देशनमाहृत्य सत्यानि प्रकाशयित्वा जातकं समवादीधपत्—'तदा प्रोष्ठपाद आनन्दोऽभूत्, राधः पुनरहमेव' इति। ]

इति राधजातकम्।

---

## ( ६ ) नृत्यजातकम्।

[ इदं शास्ता जैत्रवने विहरन् एकं बहुभाण्डिकं भिक्षुमारभ्याऽचकथत्।... शास्ता 'न भिक्षवः! इदानीमेवैष भिक्षु ह्र्यपत्रप्याभावेन रत्नशासनात् परिहीनः, पूर्वमपि स्त्रीरत्नप्रतिलाभतोऽपि परिहीन एव' इत्युक्त्वाऽतीतमाहार्षीत्। ]

अतीते प्रथमकल्पे चतुष्पदाः सिंहं राजानमकार्षुः, मत्स्याः आनन्दमत्स्यं, शकुनाः सुवर्णहंसम्। तस्य पुनः सुवर्णराजहंसस्य दुहिता हंसपोतिका अभिरूपा अभूत् इति स तस्यै वरमदात्। सा आत्मनो चित्तरुचितं स्वामिकमवारीत्। हंसराजः तस्यै वरं दत्वा हिमवति सर्वशकुने संन्यपप्तत्। नानाप्रकाराः हंसमयूरादयः

पक्खिपि। ब्राह्मणो आगन्त्वा विस्समित्वा बोधिसत्तं 'किं तात राध, माता वो अनाचारं करोति, न करोती'ति पुच्छन्तो पठमं गाथ आह--

पवासा आगतो तात! इदानिं न चिरागतो।
कच्चिन्नु तात! ते माता न अञ्ञं उपसेवती'ति॥

राधो 'तात पण्डिता नाम भूतं वा अभूतं अनिय्यानिकं नाम न कथेन्ती'ति ञापेन्तो दुतियं गाथमाह —

न खो पनेतं सुभणं गिरं सच्चूपसंहितं।
सयेथ पोट्ठपादोव मुम्मुरे उपकूलितो॥

एवं बोधिसत्तो ब्राह्मणस्स धम्मं देसेत्वा 'मयापि इमस्मिं ठाने वसितुं न सक्का'ति ब्राह्मणं आपुच्छित्वा अरञ्ञं एव पाविसि।

[ सत्था इमं देसनं आहरित्वा सच्चानि पकासेत्वा जातकं समोधानेसि। 'तदा पोट्ठपादो आनन्दो अहोसि, राधो पन अहमेवा'ति ]

राधजातकं।



## ९. नच्च-जातकं

[ इदं सत्था जेतवने विहरन्तो एकं बहुभण्डिकं भिक्खुं आरब्भ कथेसि।··· ···सत्था 'न भिक्खवे! इदानेव एसो भिक्खु हिरोत्तप्पाभावेन रतनसासना परिहीनो, पुब्बे इत्थिरतनपटिलाभतोपि परिहीनो येवा'ति वत्वा अतीतं आहरि। ]

अतीते पठमकप्पे चतुप्पदा सीहं राजानं अकंसु, मच्छा आनन्दमच्छं, सकुणा सुवण्णहंसं। तस्स पन सुवण्णराजहंसस्स धीता हंसपोतिका अभिरूपा अहोसी। सो तस्सा वरं अदासि। सा अत्तनो चित्तरुचितं सामिकं वारेसि। हंसराजा तस्सा वरं दत्वा हिमवन्ते सब्बसकुणे सन्निपातापेसि। नानप्पकारा हंसमोरादयो

शकुनगणाः समागत्य एकस्मिन् महति पाषाणतले संन्यपतन्। हंसराजः आत्मनः चित्तरुचितं स्वामिकं आगत्य गृह्णातु इति दुहितरं प्राचुक्नुशत्। सा शकुनसङ्घं अवलोकयन्ती मणिवर्णग्रीवं चित्र-प्रेक्षणं मयूरं दृष्ट्वा 'अयं मे स्वामिको भवतु' इत्यरूरुचत्। शकुनसंघाः मयूरं उपसंक्रम्य अवोचन्। 'सौम्य मयूर ! इयं राजदुहिता एतावतां शकुनानां मध्ये स्वामिकं रोचयन्ती त्वयि रुचिं उदपादि।' मयूरः 'अद्यापि तावन्मे बलं न पश्यसि' इति अतितुष्ट्या ह्र्यापत्रप्यं भित्वा तावन्महतः शकुनसंघस्य मध्ये पक्षौ प्रसार्य नर्तितुं आरब्ध। नृत्यन् अप्रतिच्छन्नो अभूत्। सुवर्णहंसराजः लज्जितः 'अस्य नैव अध्यस्तसमुत्थाना ह्रीः अस्ति न बहिर्धा समुत्थानं आपत्रप्यं, नास्य भिन्नह्र्यापत्रप्यस्य मम दुहितरं दास्यामि' इति शकुनसंघमध्ये इमां गाथामाह—

रुतं मनोज्ञं रुचिरा च पृष्ठिः वैदूर्यवर्णोपनिभा च ग्रीवा।
व्याममत्तानि च प्रेक्षणानि नृत्येन ते दुहितरं नो ददामि ॥

हंसराजः तस्मिन्नेव परिषन्मध्ये आत्मनः भागिनेयहंसपोतकाय दुहितरमदात्। मयूरो हंसपोतिकां अलब्ध्वा लज्जित्वा तत एव उत्थाय पलायिष्ट। हंसराजोऽपि आत्मनो वसनस्थानमेव गतः।

[शास्ता 'न भिक्षवः ! इदानीमेवैष ह्र्यापत्रप्यं भित्त्वा रत्नशासनात् परिहीनः, पूर्वं स्त्रीरत्नप्रतिलाभतोऽपि परिहीन एव' इति। इदं धर्मदेशनमाहृत्य, अनुसन्धिं घटयित्वा जातकं समवादीधपत्। 'तदा मयूरो बहुभण्डिकोऽभूत्, हंसराजः पुनरहमेव' इति।]

इति नृत्यजातकम्।

सकुणगणा समागन्त्वा एकस्मिं महन्ते पासाणतले सन्निपतिंसु। हंसराजा 'अत्तनो चित्तरुचितं सामिकं आगन्त्वा गण्हतू'ति धीतरं पक्कोसापेसि। सा सकुणसंघं ओलोकेन्ती मणिवण्णगीवं चित्र-पेक्खुणं मोरं दिस्वा 'अयं मे सामिको होतू'ति रोचेसि। सकुणसंघा मोरं उपसंकमित्वा आहंसु—'सम्म मोर, अयं राजधीता एत्तकानं सकुणानं मज्झे सामिकं रोचेन्ती तयि रुचिं उप्पादेसी'ति। मोरो 'अज्जापि ताव मे बलं न पस्ससी'ति अतितुट्ठिया हिरोत्तप्पं भिन्दित्वा ताव महतो सकुणसंघस्स मज्झे पक्खे पसारेत्वा नच्चितुं आरभि। नच्चतो अप्पटिच्छन्नो अहोसि। सुवण्णहंसराजा लज्जितो 'इमस्स नेव अज्झत्तासमुट्ठाना हिरि अत्थि, न बहिद्धासमुट्ठानं ओत्तप्पं, नास्स भिन्नहिरोत्तप्पस्स मम धीतरं दस्सामी'ति सकुण-संघमज्झे इमं गाथं आह—

रुदं मनुञ्ञं रुचिरा च पिट्ठी वेळुरियवण्णूपनिभा च गीवा।
व्याममत्तानि च पेक्खुणानि, नच्चेन ते धीतरं नो ददामीति॥

हंसराजा तस्मिं येव परिसमज्झे अत्तनो भागिनेय्यहंसपोतकस्स धीतरं अदासि। मोरो हंसपोतिकं अलभित्वा लज्जित्वा ततोव उट्ठहित्वा पलायि। हंसराजापि अत्तनो वसनट्ठानमेव गतो।

[ सत्था 'न भिक्खवे! इदानेवेस हिरोत्तप्पं भिन्दित्वा रतनसासना परिहीनो, पुब्बे इत्थिरतनपटिलाभतोपि परिहीनो येवा'ति। इमं धम्मदेसनं आहरित्वा अनुसंधिं घटेत्वा जातकं समोधानेसि। 'तदा मोरो बहुभण्डिको अहोसि, हंसराजा पन अहमेवा'ति।]

नच्चजातकं।

## ( ७ ) उलूकजातकम् ।

[ इदं शास्ता जैत्रवने विहरन् काकोलूककलहमारभ्याऽचकथत् । ...... भिक्षवः 'कदा प्रस्थाय पुनर्भदन्त ! काकानां च उलूकानां च अन्योन्यं वैरमुत्पन्नम्' इत्यप्राक्षिषुः । शास्ता 'प्रथमकल्पीयकालतः प्रस्थाय' इत्युक्त्वाऽतीतमाहार्षीत् । ]

अतीते प्रथमकल्पिकाः सन्निपत्य एकमभिरूपं सौभाग्यप्राप्तं आज्ञासम्पन्नं सर्वाकारपरिपूर्णं पुरुषं गृहीत्वा राजानमकार्षुः । चतुष्पदा अपि सन्निपत्य एकं सिंहं राजानमकार्षुः । महासमुद्रे मत्स्याः आनन्दं नाम मत्स्यं राजानमकार्षुः । ततः शकुनगणाः हिमवत्प्रदेशे एकस्मिन् पृष्ठिपाषाणे सन्निपत्य 'मनुष्येषु राजा प्रज्ञायते तथा चतुष्पदेषु चैव मत्स्येषु च । अस्माकं पुनरन्तरे राजा नाम नास्ति । अपतेः वासो नाम न वर्तते । अस्माकमपि राजानं लब्धुं वर्तते । एकं राजस्थाने स्थापयितव्ययुक्तकं जानीथाः, इति ते तादृशं शकुनमवलोकयमाना एकं उलूकं रोचयित्वा 'अयं नो रोचते' इत्यवोचन् । अथैकः शकुनः सर्वेषां अध्याशयग्रहणार्थं त्रिकृत्वः अशुश्रवत् । तस्य श्रावयतः द्वे श्रावणे अधिवास्य तृतीयश्रावणे एकः काक उत्थाय 'तिष्ठ तावत्, एतस्य अस्मिन् राज्याभिषेककाले एवरूपं मुखं, क्रुद्धस्य कीदृशं भविष्यति' इति । 'अनेन हि क्रुद्धेन अवलोकिता वयं तप्तकपाले प्रक्षिप्ततिला इव तत्र तत्रैव भेत्स्यामः । इमं राजानं कर्तुं मह्यं न रोचते' इति इममर्थं प्रकाशयितुं प्रथमां गाथामाह—

> सर्वैः किल ज्ञातिभिः कौशिकः ईश्वरः कृतः ।
> चेत् ज्ञात्यनुज्ञातो भणेयं एकवाचिकम् ॥

अथ एनमनुज्ञातत्वात् द्वितीयां गाथामवोचन्—

> भण सौम्य ! अनुज्ञातो अर्थं धर्मं च केवलम् ।
> सन्ति हि दहराः पक्षिणः प्रज्ञावन्तो द्युतिंधरा इति ॥

स एवमनुज्ञातो तृतीयां गाथामाह—

## ७—उलूक-जातकं

[ इदं सत्था जेतवने विहरन्तो काकोलूककलहं आरब्भ कथेसि ।......भिक्खू 'कदा पट्ठाय पन भन्ते काकानं च उलूकानं च अञ्ञमञ्ञं वेरं उप्पन्नन्ति पुच्छिंसु । सत्था 'पठमकप्पियकालतो पट्ठाया'ति वत्वा अतीतं आहरि । ]

अतीते पठमकप्पिका सन्निपतित्वा एकं अभिरूपं सोभग्गप्पत्तं आणासम्पन्नं सब्बाकारपरिपुण्णं पुरिसं गहेत्वा राजानं करिंसु । चतुप्पदापि सन्निपतित्वा एकं सीहं राजानं करिंसु । महासमुद्दे मच्छा आनन्दं नाम मच्छं राजानं अकंसु । ततो सकुणगणा हिमवन्तपदेसे एकस्मिं पिट्ठिपासाणे सन्निपतित्वा 'मनुस्सेसु राजा पञ्ञायति, तथा चतुप्पदेसु चेव मच्छेसु च । अम्हाकं पनन्तरे राजा नाम नत्थि । अप्पतिस्स वासो नाम न वट्टति । अम्हाकम्पि राजानं लद्धुं वट्टति । एकं राजट्ठाने ठपेतब्बयुत्तकं जानाथा'ति ते तादिसं सकुणं ओलोकयमाना एकं उलूकं रोचेत्वा 'अयं नो रुचती'ति आहंसु । अथेको सकुणो सब्बेसं अज्झासयगहणत्थं तिक्खत्तुं सावेसि । तस्स सावेन्तस्स द्वे सावना अधिवासेत्वा ततियसावनाय एको काको उट्ठाय 'तिट्ठ ताव, एतस्स इमस्मिं राजाभिसेककाले एवरूपं मुखं, कुद्धस्स कीदिसं भविस्सती'ति, 'इमिना हि कुद्धेन ओलोकिता मयं तत्तकपाले पक्खित्ततिला विय तत्थ तत्थेव भिज्जिस्साम । इमं राजानं कातुं मय्हं न रुचती'ति इमं अत्थं पकासेतुं पठमं गाथमाह—

सब्बेहि किर ञातीहि कोसियो इस्सरो कतो ।
सचे ञातीहनुञ्ञातो भणेय्याहं एकवाचियन्ति ॥

अथ नं अनुञ्ञातत्ता सकुणा दुतियं गाथमाहंसु—

भण सम्म अनुञ्ञातो अत्थं धम्मञ्च केवलं ।
सन्ति हि दहरा पक्खी पञ्ञावन्तो जुतिन्धरा'ति ॥

सो एवं अनुञ्ञातो ततियं गाथमाह—

न मे रोचते भद्रं वः उलूकस्याभिषेचनम् ।
अक्रुद्धस्य मुखं पश्य कथं क्रुद्धो करिष्यति ॥ इति

स एवमुक्त्वा 'मह्यं न रोचते' 'मह्यं न रोचते' इति विरवन् आकाशे उदपतत् । उलूकोऽपि एनमुत्थाय अभान्त्सीत् । ततः प्रस्थाय ते अन्योन्यं वैरं आभान्त्सिषुः । शकुनाः सुवर्णहंसं राजानं कृत्वा प्राक्रामिषुः ।

[ शास्तेदं धर्म्मदेशनमाहृत्य सत्यानि प्रकाश्य जातकं समवादीधपत् । 'तदा राज्येऽभिषिक्तहंसपोतकः पुनरहमेवाभूवम्' इति । ]

इत्युलूकजातकम् ।

---

## ( ८ ) कुरङ्गमृग-जातकम् ।

[ इदं शास्ता वेणुवने विहरन् देवदत्तमारभ्याऽचकथत् । तदा हि शास्ता 'देवदत्तो वधाय परिशक्यति' इति श्रुत्वा 'न भिक्षवः ! इदानीमेव देवदत्तो मम वधाय परिशक्यति, पूर्वमपि पर्यशकदेव' इत्युक्त्वाऽतीतमाहार्षीत् ]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्त्वः कुरङ्गमृगो भूत्वा अरण्ये एकस्य सरसः अविदूरे एकस्मिन् गुल्मे वासमचिक्लिपत् । तस्यैव सरसः अविदूरे एकस्मिन् वृक्षाग्रे शतपत्रो न्यसदत् । सरसि पुनः कच्छपो वासमचिक्लिपत् । एवं ते त्रयोऽपि सहायाः अन्योन्यं प्रियसंवासं अवात्सुः । अथैको मृगलुब्धकः अरण्ये चरन् पानीयतार्थे बोधिसत्त्वस्य पदचिह्नं दृष्ट्वा लोहनिगडसदृशं वर्ध्रमयं पाशं उड्डाय अगमत् । बोधिसत्त्वः पानीयं पातुं आगतः प्रथमयामे एव पाशे बद्धो भूत्वा बद्धरावं अरावीत् । तस्य तेन शब्देन वृक्षाग्रतः शतपत्रः उद्गतश्च, कच्छपः आगत्य 'किं नु खलु कर्तव्यम्' इति अममन्त्रन्त । अथ शतपत्रः कच्छपं आमन्त्र्य 'सौम्य ! तव दन्ताः

न मे रुच्चति भद्दं वो उलूकस्साभिसेचनं ।
अकुद्धस्स मुखं पस्स, कथं कुद्धो करिस्सती'ति ॥

सो एवं वत्वा 'मय्हं न रुच्चति' 'मय्हं न रुच्चती'ति विरवन्तो आकासे उप्पति । उलूकोपि नं उट्ठाय अनुबन्धि । ततो पट्ठाय ते अञ्ञमञ्ञं वेरं बन्धिसु । सकुणा सुवण्णहंसं राजानं कत्वा पक्कमिंसु ।

[ सत्था इमं धम्मदेसनं आहरित्वा सच्चानि पकासेत्वा जातकं समोधानेसि । 'तदा रज्जे अभिसित्तहंसपोतको पन अहमेव अहोसिन्ति । ]

उलूकजातकं ।

## ८—कुरुङ्गमिगजातकं ।

[ इदं सत्था वेळुवने विहरन्तो देवदत्तं आरब्भ कथेसि । तदा हि सत्था 'देवदत्तो वधाय परिसक्कती'ति सुत्वा 'न भिक्खवे इदानेव देवदत्तो मय्हं वधाय परिसक्कति, पुब्बेपि परिसक्कि येवा'ति वत्वा अतीतं आहरि । ]

अतीते वाराणसियं ब्रह्मदत्तो रज्जं कारेन्ते बोधिसत्तो कुरुङ्गमिगो हुत्वा अरञ्ञे एकस्स सरस्स अविदूरे एकस्मिं गुम्बे वासं कप्पेसि । तस्सेव सरस्स अविदूरे एकस्मिं रुक्खग्गे सतपत्तो निसीदि । सरस्मिं पन कच्छपो वासं कप्पेसि । एवं ते तयोपि सहाया अञ्ञमञ्ञं पियसंवासं वसिंसु । अथेको मिगलुद्दको अरञ्ञे चरतो पानीयतित्थे बोधिसत्तस्स पदवलञ्जं* दिस्वा लोहनिगळसदिसं बद्धमयं पासं ओड्डेत्वा अगमासि । बोधिसत्तो पानीयं पातुं आगतो पठमयामे येव पासे बज्झित्वा बद्धरावं रवि । तस्स तेन सद्देन रुक्खग्गतो सतपत्तो उदकतो च कच्छपो आगन्त्वा 'किन्नु खो कातब्बन्ति' मन्तयिंसु । अथ सतपत्तो कच्छपं आमन्तेत्वा 'सम्म ! तव दन्ता

* वलञ्जशब्दश्चिह्नार्थवाची देशीत्यवगन्तव्यः ।

सन्ति त्वमिमं पाशं छिन्धि। अहं गत्वा यथा स न आगच्छति तथा करिष्यामि। एवं अस्माभ्यां द्वाभ्यामपि कृतपराक्रमेण सहायो नौ जीवितं लप्स्यते' इति इममर्थं प्रकाशयन् प्रथमां गाथामाह—

अङ्ग वर्ध्रमयं पाशं छिन्धि दन्तैः कच्छप!
अहं तथा करिष्यामि यथा नेहैति लुब्धकः॥ इति

कच्छपः चर्मवरत्रां खादितुं आरब्ध। शतपत्रो लुब्धकस्य वसन-ग्रामं गतः। लुब्धः प्रत्यूषकाले एव शक्तिं गृहीत्वा न्यष्क्रामीत्। शकुनः तस्य निष्क्रमनभावं ज्ञात्वा वाशित्वा पक्षौ प्रस्फोट्य तं पुरद्वारेण निष्क्रामन्तं मुखे प्राहरीत्। लुब्धः कालकर्णिशकुनेनास्मि प्रहतः इति निवृत्य स्तोकं शयित्वा पुनः शक्तिं गृहीत्वा उदस्थात्। शकुनः 'अयं प्रथमं पूर्वद्वारेण निष्क्रान्तः, इदानीं पश्चिमद्वारेण निष्क्रमिष्यति' इति ज्ञात्वा गत्वा पश्चिमगेहे न्यसदत्। लुब्धोऽपि 'पुरद्वारेण मया निष्क्रमता कालकर्णिशकुनो दृष्टः। इदानीं पश्चिमद्वारेण निष्क्र-मिष्यामि' इति पश्चिमद्वारेण निरक्रमीत्। शकुनः पुनः वाशित्वा गत्वा मुखे प्राहरीत्। लुब्धः पुनरपि कालकर्णिशकुनेव प्रहतः 'न मे एष निष्क्रमितुं ददाति' इति निवृत्य यावत् अरुणोद्गमनं शयित्वा अरुण-वेलायां शक्तिं गृहीत्वा निरक्रमीत्। शकुनो वेगेन गत्वा लुब्धः आग-च्छतीति बोधिसत्त्वस्य अचकथत्। तस्मिन् क्षणे कच्छपेन एक एव वर्ध्रं स्थापयित्वा शेषवरत्राः खादिता अभूवन्। दन्ताः पुनरस्य पतनाकारप्राप्ता जाताः मुखं लोहितम्रक्षितम्। बोधिसत्त्वः लुब्धपुत्रं शक्तिं गृहीत्वा अशनि-वेगेनागच्छन्तं दृष्ट्वा तं वर्ध्रं छित्त्वा वनं प्राविक्षत्। शकुनो वृक्षाग्रे न्यसदत्। कच्छपः पुनः दुर्बलत्वात् तत्रैव न्यपादि। लुब्धः कच्छपं प्रसेवके प्रक्षिप्य एकस्मिन् स्थाणुके अलगीत्। बोधिसत्त्वः निवृत्य अवलोकयन् कच्छपस्य गृहीतभावं ज्ञात्वा सहायस्य जीवितदानं दास्यामि इति दुर्बल इव भूत्वा लुब्धकाय आत्मानं अदर्शत्। स 'दुर्बल एष भविष्यति, मारयिष्यामि एनम्' इति शक्तिमादाय अन्व-

अत्थि, त्वं इमं पासं छिन्द, अहं गन्त्वा यथा सो नागच्छति तथा करिस्सामि। एवं अम्हेहि द्वीहिपि कतपरक्कमेन सहायो नो जीवितं लभिस्सती'ति इममत्थं पकासेन्तो पठमं गाथमाह—

'इङ्घ वद्धमयं पासं छिन्द दन्तेहि कच्छप!
अहं तथा करिस्सामि यथा नेहिति लुद्दको'ति॥

कच्छपो चम्मवरत्तं खादितुं आरभि। सतपत्तो लुद्दकस्स वसनगामं गतो। लुद्दो पच्चूसकाले येव सत्तिं गहेत्वा निक्खमि। सकुणो तस्स निक्खमनभावं ञत्वा वस्सित्वा पक्खे पप्पोठेत्वा तं पुरेद्वारेन निक्खमन्तं मुखे पहरि। लुद्दो कालकण्णिसकुणेनम्हि पहटोति निवत्तित्वा थोकं सयित्वा पुन सत्तिं गहेत्वा उट्ठासि। सकुणो 'अयं पठमं पुरेद्वारेन निक्खन्तो इदानि पच्छिमद्वारेन निक्खमिस्सती'ति ञत्वा गन्त्वा पच्छिमगेहे निसीदि। लुद्दोपि 'पुरेद्वारेन मे निक्खमन्तेन कालकण्णिसकुणो दिट्ठो, इदानि पच्छिमद्वारेन निक्खमिस्सामी'ति पच्छिमद्वारेन निक्खमि। सकुणो पुन वस्सित्वा गन्त्वा मुखे पहरि। लुद्दो पुनपि कालकण्णिसकुणेन पहटो 'न मे एस निक्खमितुं देती'ति निवत्तित्वा याव अरुणुग्गमना सयित्वा अरुणवेलाय सत्तिं गहेत्वा निक्खमि। सकुणो वेगेन गन्त्वा 'लुद्दो आगच्छती'ति बोधिसत्तस्स कथेसि। तस्मिं खणे कच्छपेन एकं एव वद्धं ठपेत्वा सेसवरत्ता खादिता होन्ति। दन्ता पनस्स पतनाकारप्पत्ता जाता, मुखं लोहितमक्खितं। बोधिसत्तो लुद्दपुत्तं सत्तिं गहेत्वा असनिवेगेन आगच्छन्तं दिस्वा तं वद्धं छिन्दित्वा वनं पाविसि। सकुणो रुक्खग्गे निसीदि। कच्छपो पन दुब्बलत्ता तत्थेव निपज्जि। लुद्दो कच्छपं पसिब्बके पक्खिपित्वा एकस्मिं खानुके लग्गेसि। बोधिसत्तो निवत्तित्वा ओलोकेन्तो कच्छपस्स गहितभावं ञत्वा सहायस्स जीवितदानं दस्सामीति दुब्बलो विय हुत्वा लुद्दस्स अत्तानं दस्सेसि। सो 'दुब्बलो एस भविस्सति, मारेस्सामि नन्ति सत्तिं आदाय अनु-

भान्त्सीत्। बोधिसत्त्वः नातिदूरे नात्यासन्ने गच्छन् तमादाय अरण्यं प्राविक्षत्। दूरं गतभावं ज्ञात्वा पदे वञ्चयित्वा अन्येन मार्गेन वातवेगेन गत्वा शृङ्गेन प्रसेवकं उत्क्षिप्य भूम्यां पातयित्वा फालयित्वा कच्छपं न्यहारीत्। शतपत्रोऽपि वृक्षात् अवातरीत्। बोधिसत्त्वः द्वाभ्यामपि अववादं ददानः 'अहं युवां निःश्रित्य जीवितं अलप्से युवाभ्यामपि सहायस्य कर्तव्यं मम कृतम्। इदानीं लुब्धो आगत्य युवां गृह्णीयात्। तस्मात् सौम्य शतपत्र ! त्वमात्मनः पुत्रकान् गृहीत्वा अन्यत्र याहि। त्वं हि सौम्य कच्छप ! उदकं प्रविश' इत्याह। ते तथा अकार्षुः।

कच्छपो प्राविक्षत् वारि, कुरङ्गः प्राविक्षत् वनम्।
शतपत्रो द्रुमाग्रात् दूरे पुत्रान् अपानैषीत्॥

लुब्धः तत् स्थानं आगत्य किञ्चिद् अपसृत्य छिन्नप्रसेवकं गृहीत्वा दौर्मनस्यप्रातः आत्मनो गेहमगमत्। तेऽपि त्रयः सहायाः यावज्जीवं विश्वासं अछित्त्वा यथाकर्म गताः।

[ शास्तेदं देशनमाहृत्य जातकं समवादीपत्। 'तदा लुब्धो देवदत्तोऽभूत्। शतपत्रः शारीपुत्रः, कच्छपो मौद्गलायनः, कुरङ्गमृगः पुनरहमेव' इति।]

इति कुरङ्गमृगजातकम्।

---

## ( ६ ) यवशकुणजातकम्।

[ इदं शास्ता जैत्रवने विहरन् देवदत्तस्याकृतज्ञतत्वमारभ्याऽचकथत्।... शास्ता 'न भिक्षवः ! देवदत्त इदानीमेव पूर्वमपि अकृतज्ञ एव' इत्युक्त्वाऽतीतमाहार्षीत्।]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्त्वो हिमवत्प्रदेशे वृक्षकोष्ठकशकुनो भूत्वा न्यवृतत्। अथैकस्य सिंहस्य मांसं खादतः अस्थि गले अलगीत्। गलः उद्धमीत्। गोचरं ग्रहीतुं न शक्नोति, खरा वेदना वर्तन्ते। अथ एनं स शकुनः गोचरप्रसृतो

बन्धि। बोधिसत्तो नातिदूरे नाच्चासन्ने गच्छन्तो तं आदाय अरञ्ञं पाविसि। दूरं गतभावं ञत्वा पदं वञ्चेत्वा अञ्ञेन मग्गेन वातवेगेन गन्त्वा सिङ्गेन पसिब्बकं उक्खिपित्वा भूमियं पातेत्वा फालेत्वा कच्छपं नीहरि। सतपत्तोपि रुक्खा ओतरि। बोधिसत्तो द्विन्नम्पि ओवादं ददमानो 'अहं तुम्हे निस्साय जीवितं लभिं, तुम्हेहिपि सहायस्स कत्तब्बं मय्हं कतं, इदानि लुद्दो आगन्त्वा तुम्हे गण्हेय्य। तस्मा सम्म! सतपत्त, त्वं अत्तनो पुत्तके गहेत्वा अञ्ञत्थ याहि। त्वं हि सम्म! कच्छप उदकं पविसा'ति आह। ते तथा अकंसु।

कच्छपो पाविसी वारिं, कुरुङ्गो पाविसी वनं।
सतपत्तो दुमग्गम्हा दूरे पुत्ते अपानयीति॥

लुद्दो तं ठानं आगन्त्वा कञ्चि अपस्सित्वा छिन्नपसिब्बकं गहेत्वा दोमनस्सप्पत्तो अत्तनो गेहं अगमासि। तेपि तयो सहाया यावजीवं विस्सासं अछिन्दित्वा यथाकम्मं गता।

[ सत्था इमं देसनं आहरित्वा जातकं समोधानेसि। 'तदा लुद्दो देवदत्तो अहोसि, सतपत्तो सारिपुत्तो, कच्छपो मोग्गलानो, कुरुङ्गमिगो पन अहमेवा'ति। ]

कुरुङ्गमिगजातकं।

---

## ९—जवसकुण—जातकं

[ इदं सत्था जेतवने विहरन्तो देवदत्तस्स अकतञ्ञुतं आरब्भ कथेसि।...सत्था 'न भिक्खवे! देवदत्तो इदानेव पुब्बेपि अकतञ्ञू येवा'ति वत्वा अतीतं आहरि। ]

अतीते बाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते बोधिसत्तो हिमवन्तपदेसे रुक्खकोट्टकसकुणो हुत्वा निब्बत्ति। अथेकस्स सीहस्स मंसं खादन्तस्स अट्ठि गले लग्गि। गलो उद्धमायि, गोचरं गण्हितुं न सक्कोति, खरा वेदना वत्तन्ति। अथ नं सो सकुणो गोचरपसुतो

दृष्ट्वा शाखायां निलीनः 'किं ते सौम्य! दुःखम्?' इत्यप्राक्षीत्। स त-मर्थमाचख्यत्। 'अहं ते सौम्य! एतद् अस्थि अपनयेयम्। भयेन पुनः ते मुखं प्रवेष्टुं न विषहामि। खादेरपि मां' इति। 'मा भैषीः सौम्य! नाहं त्वां खादामि, जीवितं मे देहि' इति स साध्विति तं पार्श्वेन निपात्य 'को जानाति किमप्येष करिष्यति' इति चिन्तयित्वा यथा मुखं पिदधातुं न शक्नोति तथा तस्य अधरोष्ठे च उत्तरोष्ठे च दण्डकं स्थापयित्वा मुखं प्रविश्य अस्थिकोटिं तुण्डेन अपाहरीत्। अस्थि पतित्वा गतम्। स अस्थि पातयित्वा सिंहस्य मुखतो निष्क्रमन् दण्डकं तुण्डेन प्रहृत्य पातयन् निष्क्रम्य शाखाग्रे न्यलेष्ट। सिंहो नीरोगो भूत्वा एकदिवसे वनमहिषं हत्वा खादति। शकुनो विमर्क्ष्यामि एनं इति तस्य उपरिभागे शाखायां निलीय तेन सार्धं संल्लपन् प्रथमां गाथामाह—

अकार्ष्म ते कृत्यं यद् बलं अभूत्।
मृगराज! नमो इत्यस्तु अपि किञ्चित् लभे॥

तत् श्रुत्वा सिंहो द्वितीयां गाथामाह—

मम लोहितभक्षस्य नित्यं रुद्राणि कुर्वतः।
दन्तान्तरगतः सन् तद् बहु यत् जीवसि॥

तत् श्रुत्वा शकुनः इतरे द्वे गाथे अभाषीष्ट—

अकर्तज्ञं अकर्तारं कृतस्याप्रतिकारकम्।
यस्मिन् कृतज्ञता नास्ति निरर्था तस्य सेवना॥
यस्य सम्मुखचीर्णेन मित्रधर्मो न लभ्यते।
अनुसूयं अनुक्रोशं शनकैः तस्मात् अपक्रमेत्॥

एवमुक्त्वा स शकुनो अपाक्रामीत्।

[ शास्तेदं देशनमाहृत्य जातकं समवादीधपत्। 'तदा सिंहो देवदत्तोऽभूत्, शकुनः पुनरहमेव' इति। ]

इति यवशकुनजातकम्।

दिस्वा साखाय निलीनो 'किन्ते सम्म दुक्खन्ति' पुच्छि । सो तं अत्थं आचिक्खि । 'अहं ते सम्म एतं अट्ठिं अपनेय्यं, भयेन पन ते मुखं पविसितुं न विसहामि, खादेय्यासिपि मन्ति। 'मा भायि सम्म, नाहं तं खादामि, जीवितं मे देही'ति । सो 'साधू'ति तं पस्सेन निपज्जापेत्वा 'को जानाति किंमेस करिस्सती'ति चिन्तेत्वा, यथा मुखं पिदहितुं न सक्कोति तथा तस्स अधरोट्ठे च उत्तरोट्ठे च दण्डकं ठपेत्वा मुखं पविसित्वा, अट्ठिकोटिं तुण्डेन पहरि । अट्ठि पतित्वा गतं । सो अट्ठिं पातेत्वा सीहस्स मुखतो निक्खमन्तो दण्डकं तुण्डेन पहरित्वा पातेन्तो निक्खमित्वा साखग्गे निलीयि। सीहो नीरोगो हुत्वा एकदिवसं वनमहिंसं वधित्वा खादति । सकुणो 'वीमंसिस्सामि नन्ति तस्स उपरिभागे साखाय निलीयित्वा तेन सद्धिं सल्लपन्तो पठमं गाथमाह—

अकरम्हसे ते किच्चं यं बलं अहुवम्हसे ।
मिगराज ! नमो त्यत्थु, अपि किञ्चि लभामसे ।।

तं सुत्वा सीहो दुतियं गाथमाह—

मम लोहितभक्खस्स, निच्चं लुद्दानि कुब्बतो ।
दन्तन्तरगतो सन्तो तं बहु यं हि जीवसीति ।।

तं सुत्वा सकुणो इतरा द्वे गाथा अभासि—

अकतञ्ञुं, अकत्तारं, कतस्स अप्पतिकारकं ।
यस्मिं कतञ्ञुता नत्थि, निरत्था तस्स सेवना ॥
यस्स सम्मुखचिण्णेन मित्तधम्मो न लब्भति ।
अनुसुय्यं अनक्कोसं सणिकं तम्हा अपक्कमे'ति ।।

एवं वत्वा सो सकुणो पक्कामि ।

[ सत्था इमं देसनं आहरित्वा जातकं समोधानेसि । 'तदा सीहो देवदत्तो अहोसि । सकुनो पन अहमेवा'ति ]

जवसकुणजातकं ।

## ( १० ) शशजातकम् ।

[ इदं शास्ता जैत्रवने विहरन् सर्वपरिष्कारदानमारभ्याऽचकथत् ।··· शास्ता भक्तकृच्छ्रावसाने अनुमोदनं कुर्वन् 'उपासकाः तस्य प्रीतिसौमनस्यं कर्तुं वर्तते इति । इदं हि दानं नाम पुराणकपण्डितानां वंशः । पुराणकपण्डिताः संप्राप्तयाचकेभ्यो जीवितं परित्यज्य आत्मनो मांसमप्यदुः' इति उक्त्वा तेन याचितोऽतीतमाहार्षीत् । ]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्त्वः शशयोन्यां निर्वृत्य अरण्ये वसति । तस्य पुनः अरण्यस्य एकतः पर्वतपादः, एकतो नदी, एकतः प्रत्यन्तग्रामकः । अपरेऽपि अस्य त्रयः सहायाः अभूवन्–मर्कटः, शृगालः, उद्र इति । ते चत्वारोऽपि पण्डिताः एकतो वसन्तः आत्मनः गोचरस्थाने गोचरं गृहीत्वा सायाह्नसमये एकतः सन्निपतन्ति । शशपण्डितः 'दानं दातव्यं, शीलं रक्षितव्यं, उपवसथकर्म कर्तव्यं' इति त्रयेभ्यो जनेभ्य अववादवशेन धर्मं दिशति । ते तस्य अववादं सम्प्रतीष्य आत्मनः आत्मनः निवासगुल्मं प्रविश्य वसन्ति । एवं काले गच्छति एकदिवसे बोधिसत्त्वः आकाशमवलोक्य चन्द्रं दृष्ट्वा 'श्वः उपवसथदिवसः' इति ज्ञात्वा इतरान् त्रीन् आह 'श्वः उपवसथः, यूयं त्रयोऽपि जनाः शीलं समादाय उपवसथिका भवत । शीले प्रतिष्ठाय दत्तदानं महाफलं भवति । तस्मात् याचके सम्प्राप्ते युष्माभिः खादितव्याहारतो दत्वा खादेत' इति । ते 'साधु' इति सम्प्रतीष्य आत्मनः वसनस्थानेषु उषित्वा पुनर्दिवसे तेषु उद्रः प्रात इव 'गोचरं पर्येषयिष्यामि' इति निष्क्रम्य गङ्गातीरं गतः । अथैको बाडिशिकः सप्तरोहितमत्स्यान् उद्धृत्य वल्ल्या आवृत्य नीत्वा गङ्गातीरे वालुकया प्रतिच्छाद्य मत्स्यान् गृह्णन् अधोगङ्गायां अभ्रशत् । उद्रो मत्स्यगन्धं घ्रात्वा वालुकां व्यूह्य मत्स्यान् दृष्ट्वा निर्हृत्य 'अस्ति नु खलु एषां स्वामिकः' इति त्रिकृत्वः घोषयित्वा स्वामिकं

## १०—ससजातकं ।

[ इदं सत्था जेतवने विहरन्तो सब्बपरिक्खारदानं आरब्भ कथेसि ।... सत्था भत्तकिच्चावसाने अनुमोदनं करोन्तो 'उपासका, तस्स पीतिसोमनस्सं कातुं वट्टती'ति । इदं हि दानं नाम पुराणकपण्डितानं वंसो । पुराणकपण्डिता हि संपत्तयाचकानं जीवितं परिच्चजित्वा अत्तनो मंसम्पि अदंसू' ति वत्वा तेन याचितो अतीतं आहरि । ]

अतीते बाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते बोधिसत्तो ससयोनियं निब्बत्तित्वा अरञ्ञे वसति । तस्स पन अरञ्ञस्स एकतो पब्बतपादो, एकतो नदी, एकतो पच्चन्तगामको । अपरेपिस्स तयो सहाया अहेसु—मक्कटो, सिगालो, उद्दो'ति । ते चत्तारोपि पण्डिता एकतो वसन्ता अत्तनो अत्तनो गोचरट्ठाने गोचरं गहेत्वा, सायण्हसमये एकतो सन्निपतन्ति । ससपण्डितो 'दानं दातब्बं, सीलं रक्खितब्बं उपोसथकम्मं कातब्ब'न्ति तिण्णं जनानं ओवादवसेन धम्मं देसेति । ते तस्स ओवादं सम्पटिच्छित्वा अत्तनो अत्तनो निवासगुम्बं पविसित्वा वसन्ति । एवं काले गच्छन्ते एकदिवसं बोधिसत्तो आकासं ओलोकेत्वा चन्दं दिस्वा 'स्वे उपोसथदिवसो'ति ञत्वा इतरे तयो आह 'स्वे उपोसथो । तुम्हे तयोपि जना सीलं समादियित्वा उपोसथिका होथ । सीले पतिट्ठाय दिन्नदानं महप्फलं होति, तस्मा याचके सम्पत्ते तुम्हेहि खादितब्बाहारतो दत्वा खादेय्याथा'ति । ते 'साधू'ति सम्पटिच्छित्वा अत्तनो वसनट्ठानेसु वसित्वा पुनदिवसे तेसु उद्दो पातोव 'गोचरं परियेसिस्सामी'ति निक्खमित्वा गङ्गातीरं गतो । अथेको बाळिसिको सत्त रोहितमच्छे उद्धरित्वा वल्लिया आवुणित्वा नेत्वा गङ्गातीरे वालिकाय पटिच्छादेत्वा मच्छे गण्हन्तो अधो गङ्गं भस्सि । उद्दो मच्छगन्धं घायित्वा बालिकं वियूहित्वा मच्छे दिस्वा नीहरित्वा 'अत्थि नु खो इमेसं सामिको'ति तिक्खत्तुं घोसेत्वा सामिकं

अपश्यन् बल्लौ दृष्ट्वा आत्मनो वसनगुल्मे स्थापयित्वा 'वेलाया-मेव खादिष्यामि' इति आत्मनः शीलं आवर्जयन् न्यपादि। श्रृगालोऽपि निष्क्रम्य गोचर पर्येषयन् एकस्य क्षेत्रगोपकस्य कुट्यां द्वौ मांसशूलौ एकां गोधां एकं च दधिवारकं दृष्ट्वा 'अस्ति नु खलु एतस्य स्वामिकः' इति त्रिकृत्वः घोषयित्वा स्वामिकं अदृष्ट्वा दधिवार-कस्य उद्ग्रहणरज्जुकं ग्रीवायां प्रवेश्य मांसशूलौ च गोधां च मुखेन दष्ट्वा नीत्वा आत्मनः वसनगुल्मे स्थापयित्वा 'वेलायामेव खादिष्यामि' इति आत्मनः शीलं आवर्जयन् न्यपादि। मर्कटोऽपि वनषण्डं प्रविश्य आम्रपिण्डीमाहृत्य वसनगुल्मे स्थापयित्वा 'वेलायामेव खादिष्यामि' इत्यात्मनः शीलमावर्जयन् न्यपादि। बोधिसत्त्वः पुनः 'वेलायामेव निष्क्रम्य दर्भतृणानि खादिष्यामि' इति आत्मनो गुल्मे एव निपन्नो अचिचिन्तत्। 'ममान्तिकं आगतानां याचकानां तृणानि दातुं न शक्यानि। तिलतण्डुलादयोऽपि मम न सन्ति। चेत् ममान्तिकं याचकः आगमिष्यति आत्मनः शरीरमांसं दास्यामि' इति। तस्य शीलतेजसा शक्रस्य पाण्डुकम्बलशिलासनं उष्णाकारमदर्शत्। स आवर्ज्यमानः इदं कारणं दृष्ट्वा 'शशराजं विमर्क्ष्यामि' इति प्रथमं उद्रस्य वसनस्थानं गत्वा ब्राह्मणवेषेण अस्थात्। 'ब्राह्मण! किमर्थं स्थितोऽसि' इति च उक्ते 'पण्डित! चेत् किञ्चित् आहारं लभेय उपवसथिको भूत्वा श्रमणधर्मं कुर्याम्' इति। स 'साधु दास्यामि ते आहारम्' इति तेन सार्द्धं संल्लपन् प्रथमां गाथामाह—

> सप्त मे रोहिता मत्स्याः उदकात् स्थलमुद्धृताः।
> इदं ब्राह्मण! मे अस्ति एतद् भुक्त्वा वने वस इति॥

ब्राह्मणो 'प्रात इव तावद् भवतु। पश्चात् ज्ञास्यामि' इति श्रृगालस्य अन्तिकं गतः। तेनापि 'किमर्थं स्थितोऽसि' इत्युक्ते तथैवाह। श्रृगालः 'साधु दास्यामि' इति तेन सार्धं संल्लपन् द्वितीयां गाथामाह—

अपस्सन्तो वल्लियं डसित्वा अत्तनो वसनगुम्बे ठपेत्वा 'वेलायं एव खादिस्सामी'ति अत्तनो सील आवज्जन्तो निपज्जि । सिगालोपि निक्खमित्वा गोचरं परियेसन्तो एकस्स खेत्तगोपकस्स कुटियं द्वे मंससूलानि, एकं गोधं, एकञ्च दधिवारकं दिस्वा 'अत्थि नु खो एतस्स सामिको'ति तिक्खत्तुं घोसेत्वा सामिकं अदिस्वा दधिवारकस्स उग्गहणरज्जुकं गीवाय पवेसेत्वा मंससूले च गोधञ्च मुखेन डसित्वा नेत्वा अत्तनो सयनगुम्बे ठपेत्वा 'वेलायमेव खादिस्सामी'ति अत्तनो सील आवज्जन्तो निपज्जि । मक्कटोपि वनसण्ड पविसित्वा अम्बपिण्डि आहरित्वा वसनगुम्बे ठपेत्वा 'वेलायमेव खादिस्सामी'ति अत्तनो शीलं आवज्जन्ता निपज्जि । बोधिसत्तो पन 'वेलायमेव निक्खमित्वा दब्बतिणानि खादिस्सामी'ति अत्तनो गुम्बे येव निपन्नो चिन्तेसि 'मम सन्तिकं आगतानं याचकानं तिणानि दातु न सक्का, तिलतण्डुलादयोपि मय्हं नत्थि । सचे मे सन्तिकं याचको आगच्छिस्सति, अत्तनो सरीरमंसं दस्सामी'ति । तस्स सीलतेजेन सक्कस्स पण्डुकम्बलसिलासनं उण्हाकारं दस्सेसि । सो आवज्जमानो इमं कारणं दिस्वा 'ससराजं वीमंसिस्सामी'ति पठमं उद्दस्स वसनट्ठानं गन्त्वा ब्राह्मणवेसेन अट्ठासि । 'ब्राह्मण, किमत्थं ठितोसी'ति च वुत्तो 'पण्डित, सचे किञ्चि आहारं लभेय्य उपोसथिको हुत्वा समणधम्मं करेय्यन्ति ।' सो 'साधु, दस्सामि ते आहारन्ति' तेन सद्धिं सल्लपन्तो पठमं गाथमाह—

सत्त मे रोहिता मच्छा उदका थलमुब्भता ।
इदं ब्राह्मण ! मे अत्थि, एतं भुत्वा वने वसा'ति ॥

ब्राह्मणो 'पातोव ताव' होतु, पच्छा जानिस्सामी'ति सिगालस्स सन्तिकं गतो । तेनापि 'किमत्थं ठितोसी'ति वुत्तो तथेवाह । सिगालो 'साधु दस्सामी'ति तेन सद्धिं सल्लपन्तो दुतियं गाथमाह—

दूष्यं मे क्षेत्रपालस्य रात्रिभक्तं अपाभृतम् ।
मांसशूलौ च द्वौ गोधा एकं च दधिवारकम् ॥
इदं ब्राह्मण ! मे अस्ति एतद् भुक्त्वा वने वस' इति ।

ब्राह्मणः 'प्रात इव तावद् भवतु, पश्चात् ज्ञास्यामि' इति मर्कटस्य अन्तिकं गतः । तेनापि, 'किमर्थं स्थितोऽसि' इति उक्ते तथैवाह । मर्कटः 'साधु दास्यामि' इति ते सार्धं संल्लपन् तृतीयां गाथामाह—

'आम्रपक्वोदकं शीतं शीतच्छायं मनोरमम् ।
इदं ब्राह्मण ! मे अस्ति एतद् भुक्त्वा वने वस' इति ॥

ब्राह्मणः 'प्रात इव तावद् भवतु, पश्चात् ज्ञास्यामि' इति शशपण्डितस्य अन्तिकं गतः । तेनापि 'किमर्थं स्थितोऽसि' इति उक्ते तथैव आह । तत् श्रुत्वा बोधिसत्त्वः सौमनस्यप्राप्तः 'ब्राह्मण ! सुष्ठु त्वया कृतं आहारार्थाय ममान्तिकं आगच्छता । अद्याऽहं मया अदत्तपूर्वं दानं दास्यामि । त्वं पुनः शीलवान् प्राणातिपातं न करिष्यसि । गच्छ तात ! दारूणि संकृष्य अङ्गारान् कृत्वा मम आरोचय । अहं आत्मानं परित्यज्य अङ्गारगर्भे पतिष्यामि । मम शरीरे पक्वे त्वं मांसं खादित्वा श्रवणधर्मं कुर्याः' इति तेन सार्धं संल्लपन् चतुर्थीं गाथामाह—

न शशस्य तिलाः सन्ति न मुद्गाः नापि तण्डुलाः ।
अनेन अग्निना पक्वं मां भुक्त्वा वने वस' इति ॥

शक्रः तस्य कथां श्रुत्वा आत्मनः अनुभावेन एकं अङ्गारराशिं मापयित्वा बोधिसत्त्वस्य आरूरुचत् । स दर्भतृणशयनतः उत्थाय तत्र गत्वा 'चेन् मे लोमान्तरेषु प्राणकाः सन्ति ते मा मृषत' इति उक्त्वा त्रिकृत्वः शरीरं विधूय स्वकशरीरं दानमुखे दत्वा लंघित्वा पद्मपुञ्जो राजहंस इव प्रमुदितचित्तः अङ्गारराशौ अपतत् । स पुनः अग्निः बोधिसत्त्वस्य शरीरे रोमकूपमात्रमपि उष्णं कर्तुं नाशकत् । हिमगर्भं प्रविष्ट इव अभूत् । अथ शक्रमामन्त्र्य 'ब्राह्मण !

'दुस्सं मे खेत्तपालस्स रत्तिभत्तं अपाभतं ।
मंससूला च द्वे गोधा एकञ्च दधिवारकं ।।
इदं ब्राह्मण मे अत्थि, एत भुत्वा वने वसा'ति ।

ब्राह्मणो 'पातोव ताव, होतु, पच्छा जानिस्सामी'ति मक्कटस्स सन्तिकं गतो। तेनापि 'किमत्थं ठितोसी'ति वुत्तो तथेवाह। मक्कटो 'साधु दस्सामी'ति तेन सद्धिं सल्लपन्तो ततियं गाथमाह–

'अम्बपक्कोदकं सीतं सीतच्छायं मनोरमं ।
इदं ब्राह्मण मे अत्थि, एत भुत्वा वने वसा'ति ॥

ब्राह्मणो 'पातोव ताव, होतु पच्छा जानिस्सामी'ति ससपण्डितस्स सन्तिकं गतो। तेनापि 'किमत्थं ठितोसी'ति वुत्तो तथेवाह। तं सुत्वा बोधिसत्तो सोमनस्सप्पत्तो 'ब्राह्मण, सुट्ठु ते कतं आहारत्थाय मम सन्तिकं आगच्छन्तेन, अज्जाहं मया अदिन्नपुब्बं दानं दस्सामि। त्वं पन सीलवा पाणातिपातं न करिस्ससि। गच्छ तात, दारूनि सङ्कड्ढित्वा अङ्गारे कत्वा मय्हं आरोचेहि। अहं अत्तानं परिच्चजित्वा अङ्गारगब्भे पतिस्सामि। मम सरीरे पक्के त्वं मंसं खादित्वा समणधम्मं करेय्यासी'ति तेन सद्धिं सल्लपन्तो चतुत्थं गाथमाह—

'न ससस्स तिला अत्थि न मुग्गा नापि तण्डुला ।
इमिना अग्गिना पक्कं ममं भुत्वा वने वसा'ति ।।

सक्को तस्स कथं सुत्वा अत्तनो आनुभावेन एकं अङ्गाररासिं मापेत्वा बोधिसत्तस्स आरोचेसि। सो दब्बतिणसयनतो उट्ठाय तत्थ गन्त्वा 'सचे मे लोमन्तरेसु पाणका अत्थि ते मा मरिंसू'ति वत्वा तिक्खत्तुं सरीरं विधूनित्वा सकसरीरं दानमुखे दत्वा लंघित्वा पदुमपुञ्जे राजहंसो विय पमुदितचित्तो अङ्गाररासिम्हि पति। सो पन अग्गि बोधिसत्तस्स सरीरे लोमकूपमत्तम्पि उण्ह कातुं नासक्खि, हिमगब्भं पविट्ठो विय अहोसि। अथ सक्कं आमन्तेत्वा 'ब्राह्मण,

त्वया कृतोऽग्निः अतिशीतलः। मम शरीरे रोमकूपमात्रमपि उष्णं कर्तुं न शक्नोति। किं नाम एतत्' इति आह। 'पण्डित! नाहं ब्राह्मणः शक्रः अहमस्मि। तव विमर्शनार्थाय आगतः' इति। 'शक्र! त्वं तावत् तिष्ठ। सकलोऽपि चेल्लोकसन्निवासः मां दानेन विमृशेत्, नैव मे अदातुकामतां पश्येत्' इति बोधिसत्त्वः सिंहनादं अनदीत्। अथैनं शक्रः 'शशपण्डित! तव गुणः सकलकल्पं प्रकटो भवतु' इति पर्वतं पीडयित्वा पर्वतरसमादाय चन्द्रमण्डले शशलक्षणं आलिख्य बोधिसत्त्वं आमन्त्र्य तस्मिन् वनषण्डे तस्मिन्नेव वनगुल्मे तरुणदर्भतृणपृष्ठे निपात्य आत्मनो देवस्थानमेव गतः। तेऽपि चत्वारः पण्डिताः सम्मोदमानाः शील पूरयित्वा उपवसथ-कर्म कृत्वा यथाकर्म गताः।

[शास्तेदं देशनमाहृत्य सत्यानि प्रकाश्य जातकं समवादीधपत्। 'तदा उद्र आनन्दोऽभूत्, शृगालो मौद्गलायनः, मर्कटः शारीपुत्रः, शशपण्डितोऽहमेव' इति।]

इति शशजातकम्।

---

## (११) मृतकभक्त-जातकम्।

[इदं शास्ता जेत्रवने विहरन् मृतकभक्तमारभ्याऽचकथत्।......शास्ता 'न भिक्षवः! मृतकभक्तं दास्यामः' इति कृतेऽपि प्राणातिपाते काचिद् वृद्धि नामाऽस्ति। पूर्वं पण्डिता आकाशे निषद्य धर्मं दिष्ट्वा अत्राऽऽदीनवं कथयित्वा सकलजम्बूद्वीप-वासिकैः एतत् कर्माजीहपन्। इदानीं पुनः भवसंक्षेपगतत्वात् पुनः प्रादुर्भूतम्' इत्युक्त्वाऽतीतमाहार्षीत्।]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति एकः त्रयाणां वेदानां पारगः दिशाप्रामुख्यः आचार्यः ब्राह्मणः 'मृतकभक्तं दास्यामि' इति एकं एणकं ग्राहयित्वा अन्तेवासिकान् आह 'ताताः। इमं एणकं नदीं नीत्वा स्नापयित्वा कण्ठे मालां परिक्षिप्य पञ्चाङ्गुलिकं दत्वा मण्डयित्वा

तया कतो अग्गि अतिसीतलो, मम सरीरे लोमकूपमत्तम्पि उण्हं कातुं न सक्कोति । किं नामेतन्ति आह । 'पण्डित, नाहं ब्राह्मणो सक्को अहमस्मि, तव वीमंसनत्थाय आगतो'ति । 'सक्क ! त्वं ताव तिट्ठ, सकलोपि चे लोकसन्निवासो मं दानेन वीमंसेय्य, नेव मे अदातुकामतं पस्सेय्या'ति बोधिसत्तो सीहनादं नदि । अथ नं सक्को 'ससपण्डित, तव गुणो सकलकप्पं पाकटो होतू'ति पब्बतं पीळेत्वा पब्बतरसं आदाय चन्दमण्डले ससलक्खणं आलिखित्वा बोधिसत्तं आमन्तेत्वा तस्मिं वनसण्डे तस्मिं येव वनगुम्बे तरुणदब्बतिणपिट्ठे निपज्जापेत्वा अत्तनो देवट्ठानमेव गतो । तेपि चत्तारो पण्डिता सम्मोदमाना सील पूरेत्वा उपोसथ-कम्मं कत्वा यथाकम्मं गता ।

[ सत्था इमं देसनं आहरित्वा सच्चानि पकासेत्वा जातकं समोधानेसि । 'तदा उद्दो आनन्दो अहोसि, सिगालो मोग्गलानो, मक्कटो सारिपुत्तो, ससपण्डितो अहं एवा'ति । ]

ससजातकं ।

## ११. मतकभत्तजातकं ।

[ इदं सत्था जेतवने विहरन्तो मतकभत्तमारब्भ कथेसि ।·····सत्था 'न भिक्खवे, मतकभत्तं दस्सामीति कतेपि पाणातिपाते काचि वड्ढि नाम अत्थि । पुब्बे पण्डिता आकासे निसज्ज धम्मं देसेत्वा एत्थ आदीनवं कथेत्वा सकलजम्बुदीप-वासिकं एतं कम्मं जहापेसुं । इदानि पन भवसंखेपगतत्ता पुन पातुभूतन्ति वत्वा अतीतं आहरि । ]

अतीते वाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते एको तिण्णं वेदानं पारगू दिसापामोक्खो आचरियो ब्राह्मणो 'मतकभत्तं दस्सामी'ति एकं एळकं गाहापेत्वा अन्तेवासिके आह 'ताता, इमं एळकं नदिं नेत्वा नहापेत्वा कण्ठे मालं परिक्खिपित्वा पञ्चङ्गुलिकं दत्वा मण्डेत्वा

आनयेत, इति । ते साध्विति प्रतिश्रुत्य तमादाय नदीं गत्वा स्नापयित्वा, मण्डयित्वा नदीतीरे अतिष्ठिपन् । स एणकः आत्मनः पूर्वकर्म दृष्ट्वा 'एवंरूपात् नाम दुःखात् अद्य मोक्ष्ये' इति सौमनस्य-जातो घटं भिन्दन्निव महाहसितं हसित्वा पुनः 'अयं ब्राह्मणो मां घातयित्वा मया लब्धं दुःखं लप्स्यते' इति ब्राह्मणे कारुण्यं उत्पाद्य महता शब्देन प्रारोदीत् । अथ एनं ते माणवकाः अप्राक्षुः 'सौम्य एणक ! त्वं महाशब्देन अहासीश्चैव अरोदीश्च । केन नु कारणेन अहासीः, केन कारणेन अरोदीः' इति । 'यूयं मां इमं कारणं आत्मनः आचार्यस्य अन्तिके पृच्छेत' इति । ते तमादाय गत्वेदं कारणं आचार्याय आरूरुचन्त । आचार्यस्तेषां वचनं श्रुत्वा एणकमप्राक्षीत् 'कस्मात् त्वं एणक! अहासीः कस्मादरोदीः' इति । एणक आत्मनःकृतं कर्म जातिस्मरज्ञानेनानुश्रित्य ब्राह्मणायाचकथत् । 'अहं ब्राह्मण ! पूर्वं त्वादृश इव मन्त्राध्यापकब्राह्मणो भूत्वा 'मृतकभक्तं दास्यामि' इति एणकं मारयित्वा अदाम् । सोऽहं एकस्य एणकस्य घातितत्वात् एकेन ऊनेषु पञ्चसु आत्मभावशतेषु शीर्षच्छेदं प्रापम् । अयं मे कोट्यां स्थितः पञ्चशततमः आत्मभावः । सोऽहं 'अद्य एवंरूपाद् दुःखात् मोक्ष्ये इति सौमनस्यजातः अनेन कारणेन अहासिषम्' । रुदन् पुनः 'अहं तावदेकमेणकं मारयित्वा पञ्चजातिशतानि शीर्षच्छेददुःखं प्राप्य अद्य तस्मात् दुःखात् मोक्ष्ये । अयं पुनः ब्राह्मणो मां मारयित्वा अहमिव पञ्चजातिशतानि शीर्षच्छेददुःखं लप्स्यते इति त्वयि कारुण्येन अरोदिषम्' इति । 'एणक ! मा भैषीः, नाहं त्वां मारयिष्यामि' इति ब्राह्मण ! किं वदसि त्वयि मारयति अपि अमारयति अपि न शक्यः अद्य मया मरणात् मोचयितुम्' इति । 'एणक मा भैषीः अहं ते आरक्षं गृहीत्वा त्वया सार्धमेव विचरिष्यामि' इति । 'ब्राह्मण, अप्रमत्तकः तवारक्षः मया कृतपापं पुनः महद् बलवत्' इति । ब्राह्मणः एणकं मुक्त्वा 'इमं एणकं कस्यचिदपि मारयितुं न दास्यामः, इति अन्ते-

आनेथा'ति। ते 'साधू'ति पटिसुणित्वा तं आदाय नदिं गन्त्वा न्हापेत्वा मण्डेत्वा नदीतीरे ठपेसुं। सो एळको अत्तनो पुब्बकम्मं दिस्वा 'एवरूपा नाम दुक्खा अज्ज मुच्चिस्सामी'ति सोमनस्स-जातो घटं भिन्दन्तो विय महाहसितं हसित्वा, पुन 'अयं ब्राह्मणो मं घातेत्वा मया लद्धं दुक्खं लभिस्सती'ति ब्राह्मणे कारुञ्ञं उप्पादेत्वा महन्तेन सद्देन परोदि। अथ नं ते माणवका पुच्छिंसु 'सम्म एळक, त्वं महासद्देन हसि चेव रोदि च, केन नु कारणेन हसि केन कारणेन रोदी'ति। 'तुम्हे मं इमं कारणं अत्तनो आच-रियस्स सन्तिके पुच्छेय्याथा'ति। ते तं आदाय गन्त्वा इदं कारणं आचरियस्स आरोचेसुं। आचरियो तेसं वचनं सुत्वा एळकं पुच्छि 'कस्मा त्वं एळक हसि, कस्मा रोदी'ति। एळको अत्तना कतकम्मं जातिस्सरञाणेन अनुस्सरित्वा ब्राह्मणस्स कथेसि 'अहं ब्राह्मण! पुब्बे तादिसो व मन्तज्झायकब्राह्मणो हुत्वा 'मतकभत्तं दस्सामी'ति एळकं मारेत्वा अदासिं। स्वाहं एकस्स एळकस्स घातितत्ता एके-नूनेसु पञ्चसु अत्तभावसतेसु सीसच्छेदं पापुणिं। अयं मे कोटियं ठितो पञ्चसतिमो अत्तभावो। स्वाहं 'अज्ज एवरूपा दुक्खा मुच्चि-स्सामी'ति सोमनस्सजातो इमिना कारणेन हसिं।' रोदन्तो पन 'अहं ताव एकं एळकं मारेत्वा पञ्चजातिसतानि सीसच्छेददुक्खं पत्वा अज्ज तस्मा दुक्खा मुच्चिस्सामि, अयं पन ब्राह्मणो मं मारेत्वा अहं विय पञ्चजातिसतानि सीसच्छेददुक्खं लभिस्सती'ति तयि कारुञ्ञेन रोदिन्ति। 'एळक, मा भायि, नाहं तं मारेस्सामि'ति। 'ब्राह्मण, किं वदेसि, तयि मारेन्तेपि अमारेन्तेपि न सक्का अज्ज मया मरणा मुच्चितुन्ति। 'एळक, मा भायि, अहं ते आरक्खं गहेत्वा तया सद्धिं येव विचरिस्सामी'ति। 'ब्राह्मण, अप्पमत्तको तव आरक्खो, मया कतपापं पन महन्तं बलवन्ति। ब्राह्मणो एळकं मुञ्चित्वा 'इमं एळकं कस्सचिपि मारेतुं न दस्सामी'ति अन्ते-

वासिकानादाय एणकेनैव सार्धं व्यचारीत्। एणको विसृष्टमात्र एवैकं पाषाणपृष्ठं निःश्रुत्य जातगुल्मे ग्रीवां उत्क्षिप्य पर्णानि खादितुमारब्धः। तत्क्षणमेव तस्मिन् पाषाणपृष्ठे अशनिः पतितः। एकां पाषाणशकलिकां छित्वा एणकस्य प्रसारितग्रीवायां पतित्वा शीर्षमच्छिदत्। महाजनः संन्यपतत्। तदा बोधिसत्त्वः तस्मिन् स्थाने वृक्षदेवता भूत्वा निर्वृत्तः। स पश्यतः एव तस्य महाजनस्य देवतानुभावेन आकाशे पर्यङ्केन निषद्य 'इमानि सत्त्वानि एवं पापस्य फलं जानन्तः अप्येव नाम प्राणातिपातं न कुर्युः' इति मधुरेण स्वरेण धर्मं दिशन् इमां गाथामाह—

'एवं चेत् सत्त्वानि जानीयुः दुःखाय जातिसम्भवः।
न प्राणी प्राणिनं हन्यात् प्राणघाती हि शोचति' इति॥

एवं महासत्त्वः निरयभयेन तर्जयित्वा धर्मं अदिक्षत्। मनुष्यास्तत् धर्मदेशनं श्रुत्वा निरयभयभीता प्राणातिपातात् व्यरंसिषुः। बोधिसत्त्वोऽपि धर्मं दिष्ट्वा महाजनं शीले प्रतिष्ठाप्य यथाकर्मं गतः। महाजनोऽपि बोधिसत्त्वस्य अववादे स्थित्वा दानादीनि पुण्यानि कृत्वा देवनगरमपूपूरयन्।

[ शास्तेदं धर्मदेशनमाहृत्य अनुसन्धिं घटयित्वा जातकं समवादीधपत्। अहं तस्मिन् समये वृक्षदेवताऽभूवम्' इति। ]

इति मृतकभक्तजातकम्।

वासिके आदाय एळकेनेव सद्धिं विचरि । एळको विसट्ठमतोव एकं पासाणपिट्ठं निस्साय जातगुम्बे गीवं उक्खिपित्वा पण्णानि खादितु आरद्धो । तं खणं येव तस्मिं पासाणपिट्ठे असनि पतिता । एका पासाणसकलिका छिज्जित्वा एळकस्स पसारितगीवाय पतित्वा सीसं छिन्दि । महाजनो सन्निपति । तदा बोधिसत्तो तस्मिं ठाने रुक्खदेवता हुत्वा निब्बत्तो । सो पस्सन्तस्सेव तस्स महाजनस्स देवतानुभावेन आकासे पल्लंकेन निसीदित्वा 'इमे सत्ता एवं पापस्स फलं जानमाना अप्पेव नाम पाणातिपातं न करेय्युन्ति' मधुरेन सरेन धम्मं देसेन्तो इमं गाथमाह—

'एवं चे सत्ता जानेय्युं दुक्खायं जातिसम्भवो ।
न पाणो पाणिनं हञ्ञे, पाणघाती हि सोचती'ति ॥

एवं महासत्तो निरयभयेन तज्जेत्वा धम्मं देसेसि । मनुस्सा तं धम्मदेसनं सुत्वा निरयभयभीता पाणातिपाता विरमिंसु । बोधिसत्तोपि धम्मं देसेत्वा महाजनं सीले पतिट्ठापेत्वा यथाकम्मं गतो । महाजनोपि बोधिसत्तस्स ओवादे ठत्वा दानादीनि पुञ्ञानि कत्वा देवनगरं पूरेसि ।

[सत्था इमं धम्मदेसनं आहरित्वा अनुसन्धिं घटेत्वा जातकं समोधानेसि । 'अहं तेन समयेन रुक्खदेवता अहोसिन्ति' । ]

मतकभत्तजातकं ।

---

## ( १२ ) बावेरु-जातकम् ।

[इदं शास्ता जैत्रवने विहरन् हतलब्धसत्कारान् तैर्थिकान् आरभ्याऽचकथत्।··· शास्ता···'न भिक्षवः ! इदानीमेव, पूर्वमपि यावद् गुणवन्तो नोत्पद्यन्ते तावन् निर्गुणा लाभाग्रयशोऽग्रप्राप्ता अभूवन्। गुणवत्सु पुनरुत्पन्नेषु निर्गुणहतलब्धसत्कारा जाताः' इत्युक्त्वाऽतीतमाहार्षीत् । ]

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्त्वो मयूरयोन्यां निर्वृत्य बुद्धिमन्वेत्य सौभाग्यप्राप्तः अरण्ये व्यचारीत् । तदा एकत्ये वणिजो दिशाकाकं गृहीत्वा नाव्या बावेरुराष्ट्रमगमन्। तस्मिन् किल काले बावेरुराष्ट्रे शकुना नाम न सन्ति। आगतागताः राष्ट्रवासिनस्तं कूपाग्रे निषण्णं दृष्ट्वा 'पश्यतास्य छविवर्णं गलपर्यवसानं मुखतुण्डकं मणिगुलसदृशे अक्षिणी' इति काकमेव प्रशस्य ते वणिजः अवोचन्। 'इमं आर्याः शकुनं अस्मभ्यं ददातु। अस्माकं हि अनेनार्थः। यूयं आत्मनो राष्ट्रे अन्यं लप्स्यध्वे' इति। 'तेन हि मूलेन गृह्णीत' इति। 'कार्षापणेन नो दत्त'। 'न दद्मः' इति। आनुपूर्व्येण वर्धयित्वा 'शतेन दत्त' इत्युक्ते 'अस्माकं एष बहूपकारः। युष्माभिः पुनः सार्धं मैत्री भवतु' इति कार्षापणशतं गृहीत्वा अदुः। ते तं गृहीत्वा सुवर्णपञ्जरे प्रक्षिप्य नानाप्रकारेण मत्स्यमांसेन चैव फलाफलेन च प्रत्यग्रहीषुः। अन्येषां शकुनानां अविद्यमानस्थाने दशभिः असद्धर्मैः समान्वागतः काकः लाभाग्र-यशोग्रप्राप्तो अभूत्। पुनर्वारं ते वणिजः एकं मयूरराजं गृहीत्वा यथा अक्षरशब्देन वाश्यते, पाणिप्रहारशब्देन नृत्यति एवं शिक्ष-यित्वा बावेरुराष्ट्रमगमन्। स महाजने सन्निपतिते नाव्या धुरि स्थित्वा पक्षौ विधूय मधुरस्वरं निस्सार्य अनर्तीत्। मनुष्याः तं दृष्ट्वा सौमनस्यजाताः 'एतमार्या सौभाग्यप्राप्तं शुशिक्षितं शकुनराजं अस्माकं दत्त' इति अवोचन्त। अस्माभिः प्रथमं काकः आनीतः

# १२. बावेरुजातकं।

[ इदं सत्था जेतवने विहरन्तो हतलाभसक्कारे तित्थिये आरब्भ कथेसि। ... सत्था ...'न भिक्खवे इदानेव पुब्बेपि याव गुणवन्ता न उप्पज्जन्ति ताव निग्गुणा लाभग्गयसग्गप्पत्ता अहेसुं। गुणवन्तेसु पन उप्पन्नेसु निग्गुणहतलाभसक्कारा जाता' ति वत्वा अतीतं आहरि। ]

अतीते बाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते बोधिसत्तो मोरयोनियं निब्बत्तित्वा वुद्धिं अन्वाय सोभग्गप्पत्तो अरञ्ञे विचरि। तदा एकच्चे वाणिजा दिसाकाकं गहेत्वा नावाय बावेरुरट्ठं अगमंसु। तस्मिं किर काले बावेरुरट्ठे सकुणा नाम नत्थि। आगतागता रट्ठवासिनो तं कूपग्गे निसिन्नं दिस्वा 'पस्सथिमस्स छविवण्णं, गलपरियोसानं मुखतुण्डकं मणिगुळसदिसानि अक्खीनी'ति काकमेव पसंसित्वा ते वाणिजके आहंसु 'इमं अय्यो सकुणं अम्हाकं देथ। अम्हाकं हि इमिना अत्थो, तुम्हे अत्तनो रट्ठे अञ्ञं लभिस्सथा'ति। 'तेन हि मूलेन गण्हथा'ति। 'कहापणेन नो देथा'ति। 'न देमा'ति। अनुपुब्बेन वड्ढेत्वा 'सतेन देथा'ति वुत्ते 'अम्हाकं एस बहूपकारो, तुम्हेहि पन सद्धिं मेत्ती होतू'ति कहापणसतं गहेत्वा अदंसु। ते तं गहेत्वा सुवण्णपञ्जरे पक्खिपित्वा नानप्पकारेन मच्छमंसेन चेव फलाफलेन च पटिजग्गिंसु। अञ्ञेसं सकुणानं अविज्जमानट्ठाने दसहि असद्धम्मेहि समन्नागतो काको लाभग्गयसग्गप्पत्तो अहोसि। पुनवारे ते वाणिजा एकं मयूरराजानं गहेत्वा यथा अच्छरासद्देन वस्सति पाणिप्पहारसद्देन नच्चति एवं सिक्खापेत्वा, बावेरुरट्ठं अगमंसु। सो महाजने सन्निपतिते नावाय धुरे ठत्वा पक्खे विधूनित्वा मधुरस्सरं निच्छारेत्वा नच्चि। मनुस्सा तं दिस्वा सोमनस्सजाता 'एतं अय्या सोभग्गप्पत्तं सुसिक्खितं सकुणराजानं अम्हाकं देथा'ति आहंसु। 'अम्हेहि पठमं काको आनीतो,

तमग्रहीष्ट। इदानीमेतं मयूरराजं आनैषिष्म, एतमपि याचथ। युष्माकं राष्ट्रे शकुनं नाम गृहीत्वा आगन्तुं न शक्यं' इति। 'भवतु आर्यः आत्मनो राष्ट्रे अन्यं लप्स्यते! इमं नो ददातु' इति मूलं वर्धयित्वा सहस्रेण अग्रहीषुः। अथैनं सप्तरत्नविचित्रे पिञ्जरे स्थापयित्वा मत्स्यमांसफलाफलैः चैव मधुलाजशर्करापानकादिभिश्च प्रत्यग्रहीषुः। मयूरराजः लाभग्रयशोग्रप्राप्तः जातः। तस्यागतकालतः प्रस्थाय काकस्य लाभसत्कारो पर्यहायि। कश्चिदेनं अवलोकयितुमपि नैच्छत्। काकः खादनीय-भोजनीयं अलभमानः काका इति वाश्यमानो गत्वा उत्कारभूमौ अवातरीत्।

अदर्शनेन मयूरस्य शिखिणो मञ्जुभाषिणः।<br>
काकं तत्र अपूपुजन् मांसेन च फलेन च॥<br>
यदा च स्वरसम्पन्नः मयूरो बावेरुमागमत्।<br>
अथ लाभश्च सत्कारो वायसस्य अहायि॥<br>
यावन् नोत्पद्यते बुद्धो धर्मराजः प्रभाकरः।<br>
तावत् अन्ये अपूज्यन्त पृथुश्रमणब्राह्मणाः॥<br>
यदा च स्वरसम्पन्नो बुद्धो धममादेक्षत्।<br>
अथ लाभश्च सत्कारः तैर्थिकानां अहायि॥

[ इमाश्चतस्रः गाथा भाषित्वा जातकं समवादीधपत्। 'तदा काको निग्रन्थो नाथपुत्रोऽभूत्। मयूरराजोऽहमेव' इति। ]

इति बावेरुजातकम्।

